चापरिणामिनी चेति"। अपरिणामित्वात् कालेनाव्यपदेश्यः पुरुषः । बोधस्वरूपत्वाच्च नासौ देशव्यापी । देशव्यापित्वं बाह्यधर्मो न त्वध्यात्मधर्मः । देशाश्रयपदार्थाः सावयवाः चितिशक्तिर्निरवयवा। न चिन्मात्रभावेनावस्थितस्याऽ'हमनन्तदेशं व्याप्यास्मी' ति प्रत्ययः सम्भवेत् । यतोऽद्वैतबोधात्मके भाने कुतो देशरूपद्वैतभानावकाशः । तथा च श्रुतिः—

"एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् । विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥" इति ॥

तस्मात् पुरुष एकः सर्वप्राणिसाधारणः सर्वदेशव्यापी चेति सिद्धान्तः परमार्थदृशि व्यर्थः न्यायेन चासङ्गतः । तत्र देशाश्रयरूपोऽपारमार्थिकत्वदोषः प्रसज्यते। न्याय्यो हि शान्तब्रह्मवादिनां सांख्यानां पुरुषबहुत्ववादः ॥ ४ ॥

बहुत्वे ससीमत्वमित्युत्सर्गो निरपवादः देशाश्रिते बाह्यपदार्थे, अदेशाश्रिते ज्ञपदार्थे तदुत्सर्गस्यापवादः । ज्ञपदार्थश्चोत्तरोत्तरकालभाविभिः परिणामैः ससीमो भवति । अपरिणामित्वादद्वैतभानशून्यत्वाच्च पौरुषबोधस्य व्यवच्छेदकहेत्वभावः ॥ ५ ॥

एतस्मादेतत्सिध्यति । स्वरूपतो देशव्यापित्वाभावात्, व्यवहारदृशि च व्यापीत्युक्ते ग्राह्यवद्देशाश्रयदोषप्रसङ्गात्, तथा च बहुत्वेऽपि ज्ञपदार्थस्य ससीमत्वदो-

षाभावात्, सर्वतस्तुल्यो बहुपुरुष इति युक्तः प्रवाद इति । श्रुतिश्चात्र—

"अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ॥ इति ॥ ६ ॥

ननु "एकमेवाद्वितीय" मित्यादिश्रुतिष्वात्मन एकसंख्यकत्वमेवोद्दिष्टमिति चेन्न, तासु आत्मनि द्वैतभानशून्यत्वं पुरुषाणामेकजातिपरत्वं वोक्तं न संख्यैकत्वम् । तथा च सूत्रम्—"नाद्वैतश्रुतिविरोधो जातिपरत्वादिति ।" "एको व्यापी" त्यादिश्रुतिष्वीश्वरोपाधिकस्यात्मनः प्रशंसा उपासनार्थमेवोक्ता । न ताः श्रुतय आत्मनः स्वरूपावधारणपराः । यथाहुः—"मुक्तात्मनः प्रशंसा ह्युपासा वा सिद्धस्येति ।" ईश्वरविलक्षणस्य पुरुषतत्त्वस्य स्वरूपावधारणपरा श्रुतिः यथा—"अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यते स आत्मा स विज्ञेय" इति । तथा च—

"वि मे कर्णा पतयो वि चक्षुर्वी
इदं ज्योतिर्हृदय आहितं यत् ।
वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमु नु मनिष्ये" इति ॥

अत आत्मनो विस्तारादिसर्वग्राह्यधर्मशून्यता बहुता च सिद्धा ॥ ७ ॥

व्युत्थितायां निरुद्धायां वा चित्तावस्थायां पुरुष एकरूपेणावतिष्ठते । इन्द्रियगृहीतं विषयज्ञानहेतुचाञ्चल्यं पुरुषसन्निधौ बुद्धौ प्राकाश्यपर्यवसानं लभते । भेदविकाराविन्द्रियादिस्थितौ, नास्ति तयोः पुरुषतत्त्वासादनोपायः । यथाहुः—"फलमविशिष्टपौरुषेयश्चित्तवृत्तिबोधः" इति । यथा विभिन्नवर्त्तितैले दीपशिखाभासाथैकत्वं प्राप्नुतः तथेन्द्रियेषु भिन्नरूपेणावस्थिता विषया बुद्धौ निर्विशेषं प्राकाश्यपर्यवसानरूपमैक्यमाप्नुयुः । ज्ञेयस्य ज्ञाताऽहमित्यात्मबुद्धिरेव प्राकाश्यपर्यवसानं सर्वविषयज्ञानसाधारणम् । तत्र द्रष्टा सह बुद्धेरविशिष्टप्रत्ययः । तं च प्रत्ययं विषया नातिक्रामन्ति । तस्मात् पुरुषस्य साक्षिद्रष्टृत्वं बौद्धविषयस्य च निर्विशेषदृश्यत्वमिति सम्बन्धः सिद्धः ॥ ८ ॥

निरोधसमाध्यभ्यासाच्चित्तेन्द्रियाणां प्रविलयेऽस्मत्प्रत्ययगतस्य बोधस्य स्वचैतन्यभावेन निर्विप्लवावस्थानदर्शनात्तदेवास्मत्प्रत्ययस्याविकारि स्वरूपम् । तदा लीनानि चित्तेन्द्रियाण्यव्यक्तभावेनावतिष्ठन्ते । सोऽव्यक्तभावः प्रकृतिः । यथाहुः—

"अव्यक्तं क्षेत्रलिङ्गस्थगुणानां प्रभवाप्ययम् ।
सदा पश्याम्यहं लीनं विजानामि शृणोमि च ॥" इति ।

तथा च—

"गुणानां परमं रूपं न दृष्टिपथमृच्छति ।" इति ।

"नाशः कारणलयः" इति नियमात् चित्तेन्द्रियाणां च तस्यामव्यक्तावस्थायां विलयदर्शनादव्यक्तं तेषां मूलकारणम् । सविप्लवे निरोधे लीनानां चित्तादीनां पुनर्व्यक्ततादर्शनात्तत्त्वदृशि सत्स्वरूपमव्यक्तम् 'नासतः सञ्जायते' इति नियमात्। परमार्थे च सिद्धे चिद्रूपेणावस्थानकालेऽव्यक्ततानतिक्रान्तेरसद्रूपेव प्रकृतिः। यथाहुः—" निःसत्त्वासत्त्वं निःसदसद् निरसदव्यक्तमिति ।" तस्मात् तत्त्वदृशि भावरूपेणाव्यक्तं विचार्यम्। प्रधानविषयाः श्रुतयो यथा—

"इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।" इति ।

"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥" इति । तथा च— "तद्धेदं तदव्याकृतमासी" दिति । "तमो वा इदमेवाग्र आसीत् तत्परेणेरितं विषमत्वं प्रयाती"ति च । परेण पुरुषार्थेनेत्यर्थः ।

व्युत्थाने सक्रियेषु चित्तेन्द्रियेषु अस्मिमूलस्य

द्रष्टुर्यो विकारभावः प्रतीयते स तस्य विरूपो व्यवहारिको ग्रहीता । उक्तं च—"सा चात्मना ग्रहीत्रा सह बुद्धेरेकात्मिका संविदिति तस्याञ्च ग्रहीतुरन्तर्भावात् ग्रहीतृविषयः सम्प्रज्ञातः ।" इति । सास्मितेत्यर्थः । येन बुद्ध्यन्तर्भूतेन ग्रहीतृभावेन व्यवहाराः क्रियन्ते स व्यवहारिको ग्रहीता ॥ १० ॥

विक्रियमाणास्मत्प्रत्ययः त्रयाणां भावानां समाहारः । ते यथा—अस्मीत्येतदन्तर्गतः प्रकाशशीलो भावः । तस्य च विकारहेतुः क्रियाशीलो भावः, प्रकाशस्यावरकः स्थितिशीलभावश्चेति । इमे त्रयो भावाः सत्त्वरजस्तमआख्याः सर्वेषां विकाराणां मौलिकाः । तत्र प्रकाशशीलं सत्त्वम्, क्रियाशीलं रजः, स्थितिशीलञ्च तम इति । कैवल्यावस्थायां वैकारिकप्रकाशात्मकप्रख्याशून्यं परवैराग्येण प्रवृत्तिशून्यं सर्व्वसंस्कारहीननिरोधात् स्थितिशून्यञ्चान्तःकरणं प्रकृतिलीनं भवति । अव्यक्तत्वादमूः सत्त्वरजस्तमआत्मिकाः प्रख्याप्रवृत्तिस्थितयः समत्वमापद्यन्ते । तस्मादाहुः—"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" इति ॥ ११ ॥

व्यक्तावस्थायां चित्तेन्द्रियेषु गुणानां वैषम्यम् । एकत्रैकस्य प्राधान्यमन्ययोश्चोपसर्जनीभावः । ते हि गुणाः नित्यसहचराः जातिव्यक्त्योः प्रत्येकं वर्तमानाः । यथाहुः—"गुणाः परस्परोपरक्तप्रविभागाः संयोगवि-

भागधर्माणः इतरेतरोपाश्रयेणोपार्जितमूर्तयः" इति । तथा च—"अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः" इति । सर्वत्र त्रैगुण्यसद्भावेऽपि एकैकस्यैव गुणस्य प्रधानभावात् सात्त्विको राजसस्तामसश्चेति व्यवहारः । तथा चोक्तम्—" गुणप्रधानभावकृतस्त्वेषां विशेष " इति । तथा च—" सर्वमिदं गुणानां सन्निवेशमात्रम् " इति ॥ १२ ॥

भोगापवर्गौ द्वावेवार्थौ पुरुषस्य । अस्मिप्रत्ययमाश्रित्य द्वावेतावर्थावाचरितौ भवतः । यथाह—"तत्रेष्टानिष्टगुणस्वरूपावधारणमविभागापन्नं भोगः भोक्तुः स्वरूपावधारणमपवर्ग इति द्वयोरतिरिक्तमन्यद्दर्शनं नास्ति " इति । पुरुषार्थाचरणात्मकत्वाद्व्यक्तावस्थायाः पुरुषस्तस्या निमित्तकारणम् । अव्यक्तश्च व्यक्तभावस्योपादानम् । तस्यैव व्यक्तत्वपरिणतिदर्शनात् । यथाह—"लिङ्गस्यान्वयिकारणं पुरुषो न भवति हेतुस्तु भवति इति । अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम्" इति । विकारजातस्य निमित्तान्वयिनोर्द्वयोः कारणयोर्मध्ये निमित्तं पुरुषः स्वचैतन्यस्वरूपः सदा बुद्धः प्रधानं त्वचेतनमव्यक्तस्वरूपम् । विरुद्धकारणद्वयसद्भावात् व्यक्तावस्थायाः व्यक्तभावेषु त्रय एव भावा उपलभ्यन्ते । ते यथा–पुरुषाभिमुखः चेतनावद्भावः, अव्यक्ताभिमुखः आवृतभावस्तथा च तयोः सम्बन्ध-

भूतश्चञ्चलभावो येनावृतः प्रकाशाभिमुखः क्रियते प्रकाशितश्च भाव आवरणाभिमुखः क्रियत इति । ते हि यथाक्रमं प्रकाशशीलाः सात्त्विकाः स्थितिशीलाः तामसाः क्रियाशीलाश्च राजसा भावा इति ॥ १३ ॥

व्यक्तावस्थायामाद्या व्यक्तिरस्मीति प्रत्ययमात्रात्मको महान्, यमाश्रित्य सर्वे ज्ञानचेष्टादयः सिध्यन्ति । कैवल्यावस्थायां प्रख्याप्रवृत्तिस्थित्यभावात् नास्ति व्यक्तसम्बन्धिनः महतः सद्भावावकाशः । स एव महान् व्यवहारिको ग्रहीता । व्यक्तावस्थायामस्मीति-प्रत्ययमात्रमभिमुखीकृत्य समाहिते चित्ते यस्मिन्नान्तरभावेऽवस्थानम्भवति स एव महान् । सविकारप्रकाशशीलो महानात्मा, पुरुषस्तु अविकारी चिद्रूपः ॥ १४ ॥

बुद्धितत्त्वञ्च लिङ्गमात्रञ्चेति महतः संज्ञाभेदः । क्वचिच्च स्वरूपेणागृहीतो महान् करणकार्यं कुर्वन् बुद्धिरित्यभिधीयते । यथोक्तम्—"बुद्धिरध्यवसायेन ज्ञानेन च महाँस्तथेति" ॥ ज्ञानेनास्मीति प्रत्ययावधानेनेत्यर्थः । यथाह—"तमणुमात्रमात्मानमनुविद्यास्मीति एवं तावत् सम्प्रजानीते" इति । अणुमात्रं सूक्ष्मम् । महत्तत्त्वं साक्षात्कुर्वतो योगिन एवंविधा संवित् सम्प्रजायत इति भावः । सर्वे प्रत्यया बुद्धिरित्यभिधीयन्ते, महान् आत्मा पुनरात्मविषया शुद्धा बुद्धिरिति विवेच्यम् ॥ १५ ॥

२

पुरुषाभिमुखत्वाद्बुद्धिसत्त्वमतिप्रकाशशीलं सात्त्विकम् । यथाहुः—"द्रव्यमात्रमभूत्सत्त्वं पुरुषस्येति निश्चयः ।" इति । तथा च "अव्यक्तात्सत्त्वमुद्रिक्तममृतत्वाय कल्पते । सत्त्वात्परतरं नान्यत् प्रशंसन्तीह पण्डिताः ॥ अनुमानाद्विजानीमः पुरुषं सत्त्वसंश्रयम् ।" इति ॥ १६ ॥

अस्य महदात्मनो यः क्रियाशीलो भावो येनानात्मभावेन सहात्मसम्बन्धः प्रजायते सोऽहंकारः । स चासावहंकारोऽभिमानात्मकः ममताहंतयोर्मूलं क्रियाशीलत्वाद्राजसिकः । स्मर्यते च--"अहं कर्त्तेति चाप्यन्यो गुणस्तत्र चतुर्दशः । ममायमिति येनायं मन्यते न ममेति चेति" ॥ १७ ॥

येनानात्मभावा आत्मना सह विधृतास्तिष्ठन्ति तदेव स्थितिशीलं हृदयाख्यं मनः । तद्धि तामसमन्तःकरणाङ्गम् । प्रख्याप्रवृत्तिस्थितय इति त्रयाणामन्तःकरणधर्माणां मध्ये यत् स्थितिधर्माश्रयभूतं तन्मनः । "तथाशेषसंस्काराधारवत्वा" दिति सूत्रेऽपि तृतीयान्तःकरणस्य मनसः स्थितिशीलत्वमुक्तम् । नेदं परिभाषितं मनः षष्ठमाभ्यन्तरमिन्द्रियम् । अन्तःकरणेषु सात्त्विकराजसौ बुद्ध्यहंकारौ, तत्र च यत्तामसं तन्मन इति द्रष्टव्यम् ॥ १८ ॥

महदहंकारमनांसि सर्व्वकरणमूलमन्तःकरणम् ।

पुरुषार्थाचरणक्रियायाः साधकतमत्वात्तानि करणमित्यभिधीयन्ते । एषां परिणामभूताः सर्वा अप्यात्मशक्तयः करणम् । महदादयः वक्ष्यमाणबाह्यकरणपुरुषयोर्मध्यस्थभूतत्वादन्तःकरणमित्यभिधीयन्ते ॥ १९ ॥

आत्मबाह्येन हेतुना बौद्धचेतनताया उद्रेके यस्तदुद्रेकस्य प्रकाशभावस्तदेव प्राकाश्यपर्यवसानं प्रख्यास्वरूपम् । यो वा प्रकाशशीलस्य बुद्धिसत्त्वस्य ग्राह्यकृत उद्रेकस्तदेव ज्ञानम् । अभिमानेनैवासावुद्रेकोऽस्मत्प्रकाशमापद्यते । स चाभिमान आत्मानात्मनोर्भावयोः सम्बन्धोपायः । अभिमानादृद्धौ प्रत्ययौ सम्भवतः, अहन्ता ममता चेति । धनादौ ममता, शरीरेन्द्रियेषु चाहन्ता । यथा नष्टे ममतास्पदे धनेऽहमुच्चाटितो भवामीति प्रत्ययः तथा चाहन्तास्पदे इन्द्रिये शब्दादिबाह्यक्रिययोद्रिक्ते सति उद्रिक्तस्तद्गताभिमानः प्रकाशलमस्मद्भावमुद्रिक्तं करोति । प्रकाशशीलभावस्योद्रेकफलमेव ज्ञानम् । यथाभिमानेनानात्मभाव आत्मसन्निधौ नीयते तथात्मप्रत्ययोऽपि अनात्मभावेन सह सम्बध्यते । अभिमानेनानात्मभावस्य स्वात्मीकरणं प्रवृत्तिस्वरूपम् । तथा च तस्य स्वात्मीकृतभावस्य संसृष्टस्य अवस्थानं स्थितिस्वरूपम् ॥ २० ॥

उक्तं गुणानां नित्यसाहचर्यम् । ते सर्वत्रैव परस्परमङ्गाङ्गित्वेन वर्तन्ते । तस्मात्त्रिगुणात्मकमन्तःकरणाङ्ग-

अयमपि अन्योन्यव्यतिषक्तं परिणमते । यत्रैकं तत्रैव त्रीणि, एकस्मिन्नुक्ते इतरावध्याहार्यौ ॥ २१ ॥

ज्ञाने स्थितिक्रियाभ्यां प्रकाशगुणस्याधिक्याज्ज्ञानं सात्त्विकम् । चेष्टायामुद्रेकस्यैव प्राधान्यं ततः सा राजसी । स्थित्यां याऽपरिदृष्टा क्रिया सावृतिस्वरूपा, ततः स्थितिस्तामसी । ज्ञानचेष्टास्थितय प्रख्याप्रवृत्ति-स्थितयो वेति त्रयः सत्त्वरजस्तमोगुणान्वयिनः मूलभावा वक्ष्यमाणास्तु प्रमाणादिवृत्तयो येषां भेदाः ॥ २२ ॥

चित्तेन्द्रियरूपेण परिणतान्तःकरणमस्मितेत्या-ख्यायते । यथाहुः—" दृग्दर्शनशक्त्योरेकात्मतेवा-स्मितेति । " आत्मना सह करणशक्तेः अभिमानकृतै-कात्मकताऽस्मितेत्यर्थः । तयैवाहं श्रोताहं द्रष्टेत्यादिकर-णात्मप्रत्ययसम्भवः । तथा चाहुः—" षष्ठश्चाविशेषोऽ स्मितामात्र एते सत्तामात्रस्यात्मनः महतः षड्विशेषप-रिणामा " इति । सोऽसौ षष्ठोऽविशेषश्चित्तादिकरणो-पादानमित्यवगन्तव्यम् । श्रूयते च—" अथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्र-मिति " ॥ २३ ॥

अस्मितायाः क्लिष्टाक्लिष्टाख्यो द्विविधः परिणाम-प्रवाहो जात्यन्तरपरिणामकारी । अक्लिष्टः प्रकाशाभि-मुख ऊर्ध्वस्रोतो विद्यापरिणामः, आवरणाभिमुखोऽर्वा-क्स्रोतश्चाविद्यापरिणामः क्लिष्टः । यत्रान्तरप्रकाशगुण-

स्योत्कर्षः सात्त्विककरणप्रकृत्यापूरश्च, स विद्यापरिणामः। यत्र चानात्मभावेन सह सम्बन्धः पुष्कलो भवति, स अविद्यापरिणामः । यथाहुः—" अर्वाक्स्रोतस इत्येते मग्नास्तमसि तामसा " इति । तमसि अविद्यायामित्यर्थः । अविद्यया प्रकाशक्रिये रुध्यमाने भवतः ॥ २४ ॥

अविषयीभूत बाह्यसम्पर्कादन्तःकरणस्य त्रिगुणानुसारी त्रिविधबाह्यकरणपरिणामः प्रजायते। "रूपरागादभूच्चक्षु"रित्याद्यात्र स्मृतिः । बाह्यकरणानि यथा प्रकाशप्रधानं ज्ञानेन्द्रियं, क्रियाप्रधानं कर्मेन्द्रियं, स्थितिप्रधानाः प्राणाश्चेति । पञ्च पञ्च ज्ञानेन्द्रियादीनि ॥ २५ ॥

बाह्यकरणार्पितविषयसंयोगादन्तःकरणस्य याः परिणामवृत्तयो जायन्ते तेषां समष्टिश्चित्तम् । तद्धि बाह्यार्पितविषयोपजीवि चित्तं नियोगकर्तृत्वात् प्रधानं बाह्यानां भूपवत्प्रकृतीनाम् । द्वितयी चित्तवृत्तिः शक्तिवृत्तिरवस्थावृत्तिश्चेति । यया चिन्तादयः क्रियन्ते सा शक्तिवृत्तिः । बोधचेष्टास्थितिसहगताचित्तावस्थानविशेषोऽवस्थावृत्तिः ।

अन्तःकरणं तु प्रत्ययसंस्कारधर्मः । तत्र प्रख्याप्रवृत्ती प्रत्ययाः । ते चित्तस्य ज्ञानवृत्तयः । स्थितिस्तु संस्कारा ये हृदयाख्यमनसः विषयाः । उक्तं च—" यतो निर्याति

विषयो यस्मिंश्चैव विलीयते । हृदयन्ताद्विजानीयात् मनसः स्थितिकारणमिति " ॥ २६ ॥

पञ्चतय्यः प्रत्येकं प्रख्याप्रवृत्तिस्थितयः । तत्र प्रख्यारूपस्य चित्तसत्त्वस्य विज्ञानाख्याः पञ्च वृत्तयः, प्रमाणस्मृतिप्रवृत्तिविज्ञानाविकल्पाविपर्यया इति । प्रवृत्तिरूपस्य संकल्पकमनसः वृत्तयः, संकल्पकल्पनकृतिविकल्पनविपर्यस्तचेष्टा इति स्थितिरूपस्य संस्काराधारस्य हृदयाख्यमनसः संस्काररूपधार्थविषयाः प्रमाणसंस्कारस्मृतिसंस्कारप्रवृत्तिसंस्काराविकल्पसंस्कारविपर्यासससंस्कारा इति ।

अथ कथं पञ्च भेदाश्चित्तस्य सम्भवन्तीति ? उच्यते । त्र्यङ्गम् अन्तःकरणम् । तस्य परस्पराविरुद्धे सात्त्विकतामसकोटी । तस्मादन्तःकरणं परिणम्यमानं पञ्चधा परिणामनिष्ठां प्राप्नोति । तत्राद्यपरिणाम आद्यङ्गबुद्धेरनुगतः प्रकाशाधिकः, मध्यस्तु अभिमानप्रधानः क्रियाधिकः, अन्त्यश्च मनोऽनुगतः स्थितिप्रधानः । आसां परिणामनिष्ठानां मध्ये द्वे परिणामनिष्ठे वर्तयाताम् । तयोरेका आद्यमध्ययोः सम्बन्धभूता, अन्या च मध्यान्तयोः सम्बन्धभूता । एवं त्र्यङ्गत्वहेतोः परिणम्यमानादन्तःकरणात्पंचविधाः परिणतशक्तयः संभवन्तीति । ततस्तु चित्तशक्तेर्बाह्यकरणशक्तीनां च पञ्च पञ्च भेदा अभवन् ॥ २७ ॥

प्रमाणादीनि विज्ञानानि । विज्ञानं नाम चैतसिकं ज्ञानं मन आदि इन्द्रियैरालोचनान्तरं समवेतज्ञानशक्तिभिर्यत्संभाव्यते । अनधिगततत्त्वबोधः प्रमा । प्रमायाः करणं प्रमाणम् । चित्तवृत्तिषु प्रमाणं प्रकाशाधिक्यात्सात्त्विकम् । "प्रत्यक्षानुमानागमाः प्रमाणानि ।" ज्ञानेन्द्रियप्रणालिकया यश्चैत्तिको बोधस्तत्प्रत्यक्षम् । ज्ञानेन्द्रियमात्रेणालोचनाख्यं ज्ञानं सिध्यति । उक्तं च—"अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं मुग्धवस्तुजम् ॥ ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया । बुद्ध्यावसीयते सा हि प्रत्यक्षत्वेन सम्मता ॥" इति ।

आलोचनं हि एकेनैवेन्द्रियेणैकदा गृह्यमाणविषयख्यात्यात्मकम् । तदनन्तरभूतं जातिधर्मादिविशिष्टं ज्ञानं चैत्तिकप्रत्यक्षम् । यथा वृक्षदर्शने अक्ष्णा हरिद्वर्णाकारविशेषमात्रं गृह्यते । उत्तरक्षणे च छायाप्रदत्वादिगुणान्वितो न्यग्रोधवृक्षोऽयमिति यद्विज्ञानं भवति तदेव चैत्तिकप्रत्यक्षमिति ॥ २८ ॥

असहभाविसहभाविसम्बन्धग्रहणपूर्वकमप्रत्यक्षपदार्थज्ञानमनुमानम् । आप्तवचनाच्छ्रोतुर्यो ह्यविचारसिद्धो निश्चयः स आगमः । यद्वाक्यवाहितशक्तिविशेषादभिभूतविचारस्य श्रोतुस्तद्वाक्यार्थनिश्चयो भवति स तस्य श्रोतुराप्तः । पाठजनिश्चयो नागमप्रमाणम् ।

अनुमानजः शब्दार्थस्मरणजो वा तत्र निश्चयः । आगम-प्रमाणे तु स्वबोधसंक्रान्तिकामस्य श्रोतृविचाराभिभव-कृच्छक्तिमतो वक्तुः श्रोतुश्च साधकत्वेन सद्भावोऽहार्यः । यथाह—“आप्तेन दृष्टोऽनुमितो वार्थः परत्र स्वबोध-संक्रान्तये शब्देनोपदिश्यते शब्दात्तदर्थविषया वृत्तिः श्रोतुरागम” इति । तस्मात् प्रत्यक्षानुमानविलक्षणं प्रमायाः करणमागम इति सिद्धम् ॥ २९ ॥

प्रत्यक्षजं विशेषज्ञानम् । मूर्तिगृह्यमाणव्यवधि-धर्मयुक्तः विशेषः । घटादीनां स्वविशेषशब्दस्पर्शरूपाद्यो मूर्तिः । व्यवधिराकारः । अनुमानागमाभ्यां सामान्य-ज्ञानम् । तद्धि सत्तामात्रनिश्चयः ज्ञातमूर्त्यादिधर्मैः सा सत्ता विशिष्यते ॥ ३० ॥

अनुभूतविषयासंप्रमोषः स्मृतिः । तत्र पूर्वानुभूतस्य संस्काररूपेणावस्थितस्य विषयस्यानुभूतिः । स्मृतेरपि विषयानुसारतस्त्रयो भेदाः। तद्यथा विज्ञानस्मृतिः प्रवृत्ति-स्मृतिः निद्रादिरुद्धभावस्मृतिरिति । प्रमाणतुलनया प्रका-शाल्पत्वात्स्मृतेर्द्वितीये सात्त्विकराजसवर्गेऽन्तर्भावः॥३१॥

तृतीया विज्ञानवृत्तिः प्रवृत्तिविज्ञानम् । तच्च ज्ञानवृत्तिषु राजसम् । तद्भेदा यथा—संकल्पादिमानस-चेष्टानां विज्ञानं,कृतिजन्यकर्मणां विज्ञानं,तथा प्राणादेर-परिदृष्टचेष्टानामस्फुटविज्ञानञ्चेति त्रीणि चेतस्य-नुभूयमानानां भावानां विज्ञानानि ॥ ३२ ॥

चतुर्थवृत्तिर्विकल्पस्तल्लक्षणं यथाह—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति । "वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यत" इति । वास्तवार्थशून्यवाक्यस्य यज्ज्ञानं तदनुपातिनी या चित्तपरिणतिर्जायते स विकल्पः । भाषायां विकल्पवृत्तेरुपकारिता । त्रिविधो विकल्पो यथा—वस्तुविकल्पः, क्रियाविकल्पः तथा चाभावविकल्पः । आद्यस्योदाहरणं यथा—"चैतन्यं पुरुषस्य स्वरूपमिति" "राहोः शिर" इति वा । अत्र वस्तुनोरेकत्वेऽपि व्यवहारार्थं तयोर्भेदवचनं वैकल्पिकम् । अकर्ता यत्र व्यवहारसिद्ध्यर्थं कर्तृवत् व्यवह्रियते स क्रियाविकल्पः । यथा "तिष्ठति बाणः", ष्ठा गतिनिवृत्ताविति धात्वर्थः गतिनिवृत्तिक्रियायाः कर्तृरूपेण बाणो व्यवह्रियते, वस्तुतस्तु बाणे नास्ति तत्क्रियाकर्तृत्वमिति । अभावार्थपदाश्रिता चित्तवृत्तिरभावविकल्पः, यथा "अनुत्पत्तिधर्मा पुरुष" इति । "उत्पत्तिधर्मस्याभावमात्रमवगम्यते न पुरुषान्वयी धर्मस्तस्माद्विकल्पितः स धर्मस्तेन चास्ति व्यवहार" इति ।

वैकल्पिकौ नित्यव्यवहार्यौ दिक्कालौ । यथाह "स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवावभासत" इति । भूतभाविनौ कालौ शब्दमात्रौ अवर्तमानपदार्थौ । तथा च रूपादिधर्मशून्यः न कश्चिदवकाशाख्यो बाह्यः

प्रमेयो भावपदार्थोऽवशिष्यते, रूपादिशून्यस्य बाह्य-स्याकल्पनीयत्वात् । तस्मात् सांख्यनये दिक्कालौ वैकल्पिकत्वेन सम्मतौ । अवास्तवत्वेऽपि वैकाल्पिक-विषयस्य सिद्धवदसौ व्यवाह्रियते । वक्ष्यमाणविपर्यय-वृत्तितुलनया प्रकाशाधिक्याद्विकल्पस्य चतुर्थे राज-सतामसवर्गेऽन्तर्भावः ॥ ३३ ॥

पंचमी विज्ञानवृत्तिः विपर्ययः । स च मिथ्याज्ञान-मतद्रूपप्रतिष्ठम् । प्रमाणविरुद्धत्वात्तामसवर्गीयामिति । तस्यापि विषयानुसारतः भेदः पूर्ववत् । अनात्मनि आत्मख्यातिरेव मूलविपर्ययः ॥ ३४ ॥

प्रवृत्तिषु आद्यः संकल्पः सात्त्विको ज्ञानसान्निकृष्ट-त्वात् । उक्तं च " ज्ञानजन्या भवेदिच्छा इच्छाजन्या कृतिर्भवेत् । कृतिजन्या भवेच्चेष्टा चेष्टाजन्या क्रिया भवेदिति ॥ "

चेतस्यनुभाव्यमानक्रियायामस्मिताप्रयोगः संकल्प-स्वरूपम् । यथा—गमिष्यामीत्यत्र गमनक्रिया अनागता, तदनुभावपूर्वकं तद्गत आत्मनो भावनं संकल्पस्वरूपम् । गमिष्याम्यनागतगमनक्रियावान् भविष्यामीत्यर्थः । क्रियानुस्मृत्या सहात्मसम्बन्धोऽभिमानकृतः ।

कल्पनं द्वितीयं सात्त्विकराजसम् । या चित्तचेष्टा आहितविषयानितरेतरेषु आरोपयति तत्कल्पनम् । यथा अदृष्टहिमगिरिकल्पनम् । चित्ताहितपर्वततुहिनानु-

स्मृतिपूर्वकं पर्वताग्रे तुहिनमारोप्य हिमाद्रिः कल्प्यते । यथोक्तम्—"नामजात्यादियोजनात्मिका कल्पना"।

तृतीया प्रवृत्तिः कृतिः राजसी । इच्छाजन्यया यया चित्तचेष्टया प्राणेन्द्रियेषु चित्तावधानं क्रियते सा कृतिः । सा हि प्राणेन्द्रियाणां कार्यमूला मनश्चेष्टा । नहि गमिष्यामीति मनोरथमात्रेणैव गमनं भवति । तत्संकल्पानन्तरं यया चित्तचेष्टया अवधानद्वारेण पादौ चलौ क्रियेते सैव कृतिः, श्रूयते च "मनःकृतेनायात्यस्मिञ्छरीरे" । इति । उक्तं च "परिणामोऽथ जीवनम् । चेष्टाशक्तिश्च चित्तस्य धर्मा दर्शनवर्जिता" इति ।

विकल्पनं चतुर्थी प्रवृत्तिः चित्तस्य राजसतामसवर्गीया । तच्च संशयरूपमनेककोटिषु मुधा धावनं चित्तस्य । कालादिवैकल्पिकविषयव्यवहरणं चापि यत्र विकल्पवदवस्तुविषयमुररीकृत्य चित्तं चेष्टते तदपि विकल्पनम् । उक्तं च "संशय उभयकोटिस्पृग्विज्ञानं स्यादिदमेवं नैवं स्यादिति ।" अस्ति वा नास्ति वेति, कार्यमिदं न वा कार्यमित्यादीनि विकल्पनानि ।

अतद्रूपप्रतिष्ठा या चित्तचेष्टा स्वप्नादिषु भवति सा विपर्यस्तचेष्टा चित्तस्य तामसी पञ्चमी प्रवृत्तिरिति । उक्तं च–"नेयं ( स्वप्नकालीना भावितस्मर्तव्या ) स्मृतिरपि तु विपर्यस्तलक्षणोपपन्नत्वात्स्मृत्याभासतया स्मृतिरुक्तेति" ।

चेष्टायामभिमानोद्रेकस्या वक्रप्रवाहः । यतोऽसावन्तः प्रजायते ततस्तु बहिः कर्मेन्द्रियादावागच्छति । बोधे चान्तःप्रवाहाभिमानोद्रेकः वैषयिकवस्तुनः बाह्यत्वात् ।

संस्काराधारस्य हृदयाख्यमनसः अनुगुणाश्चित्तधर्माः संस्काररूपा स्थितिः । स्थितिषु प्रमाणसंस्काराः सात्त्विकाः, स्मृतीनां संस्काराः सात्त्विकराजसाः, राजसाः प्रवृत्तिसंस्काराः, राजसतामसाः विकल्पसंस्काराः, तथा तामसा विपर्यासस‌ंस्कारा इति ॥ ३५ ॥

सुखाद्या नवधा चित्तस्यावस्थावृत्तयः सर्ववृत्तिसाधारण्यः । उक्तं च—"सर्वाश्चैता वृत्तयः सुखदुःखमोहात्मिका" इति । तासां तिस्रो बोध्यगतास्तिस्रश्चेष्टागतास्तिस्रश्च धार्यगताः । शक्तिवृत्तिवदवस्थावृत्तिभिश्चित्तस्य न ज्ञानादिक्रियासिद्धिः । ज्ञानक्रियाकाले चित्तस्य यद्यद्भावेनावस्थानं भवति ता एवावस्थावृत्तयः । करणगतत्वात्सर्वा एता अनुभूयन्ते अथवा अनुभवेन प्रत्ययत्वमापद्यन्ते ॥ ३६ ॥

तत्र सुखदुःखमोहाः सत्त्वरजस्तमः प्रधानाः बोध्यगता अवस्थावृत्तयः । सर्वे बोधाः सुखावहा वा दुःखावहा वा मोहावहाः समुत्पद्यन्ते । अनुकूलविषयकृतोद्रेकात् सुखम्, प्रतिकूलविषयाच्च दुःखम् । मोहः पुनः सुखस्य दुःखस्य वातिभोगात् सुखदुःखविवेकशून्योऽ

निष्ठो जडभावः, यथा भये । उक्तञ्च—"अथ यन्मोह-संयुक्तं काये मनसि वा भवेत् । अप्रतर्क्यमविज्ञेयं तम-स्तदुपधारयेत् ॥" इति । तथा च–"तत्र विज्ञानसंयुक्ता त्रिविधा चेतना ध्रुवा । सुखदुःखेति यामाहुरदुःखाम-सुखेति चेति ॥" ध्रुवा अवस्थिता इत्यर्थः ॥ ३७ ॥

रागद्वेषाभिनिवेशाश्चेष्टागतावस्थावृत्तयस्त्रिगुणानुसारिण्यः । रक्तं द्विष्टं वाभिनिविष्टं हि चित्तं चेष्टते । सुखानुशयी रागः दुःखानुशयी द्वेषः स्वरसवाहिनी तथा मूढ़ा चेष्टावस्थाभिनिवेशः । न मरणत्रासमात्रमयमभि-निवेशः । स्वारसिक्याः प्राणादिवृत्तिरूपाया अभिनि-विष्टचेष्टाया नाशाशंकैव मरणभयात्मिकेति । अन्यत् सर्वं भयं तथा क्षिप्ताद्यवस्था यत्र सुखदुःखशून्यं स्वतः चित्तचेष्टनं स एवाभिनिवेशः ॥ ३८ ॥

जाग्रत्स्वप्नसुषुप्तयो धार्यगतावस्थावृत्तयः । धार्यं शरीरम् । तत्सम्पर्काद्धार्यगतावस्थावृत्तयश्चित्तस्य । जाग्रदवस्था सात्त्विकी, स्वप्नावस्था राजसी, निद्रावस्था तामसी। तथा च शास्त्रम् – "सत्त्वाज्जागरणं विद्याद्रजसा स्वप्नमादिशेत् । प्रस्वापनं तु तमसा तुरीयं त्रिषु सन्त-तम्" ॥ इति । जागरे चित्तेन्द्रियाधिष्ठानान्यजडानि चेष्टन्ते । जाड्यमापन्नेषु ज्ञानेन्द्रियकर्मेन्द्रियेषु तदनि-यतस्य अनुव्यवसायाधिष्ठानस्य यदा चेष्टा तदवस्था स्वप्नः । यथोक्तम्—"इन्द्रियाणां व्युपरमे मनोऽव्युपरतो

यदि । सेवते विषयानेव तं विद्यात्स्वप्नदर्शनम् ॥" इति । उत्स्वप्ने तु अजाडयम् कर्मेन्द्रियाधिष्ठानानाम् । सुषुप्ति-लक्षणं यथाह—'अभावप्रत्ययालम्बना वृत्तिर्निद्रे" ति । तदा चित्तेन्द्रियाधिष्ठानानां सम्यग्जडत्वम् । उक्तं च—"सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुख-रूपमेति ॥" इति । गुणानामभिभाव्याभिभावकस्वभा-वादवस्थावृत्तीनामस्थेमाऽऽवर्तनञ्चेति ॥ ३९ ॥

त्रिविधश्चित्तव्यवसायः । सद्व्यवसायोऽनुव्यवसा-योऽपरिदृष्टव्यवसायश्चेति । कतिपयशक्ती अधिकृत्यै-कदेव यच्चित्तचेष्टितं स व्यवसायः । सद्व्यवसायो ग्रहण-मनुव्यवसायश्चिन्तनमपरिदृष्टव्यवसायो धारणम् । ज्ञाने-न्द्रियादीनधिकृत्य वर्तमानविषयो व्यवसायः सदाख्यः । अतीतानागतविषयोऽनुव्यवसायः स्मृतविषयालोडना-त्मकः । येन चावेद्यमानेन व्यवसायेन निद्रादावपि सदा चित्तपरिणामो जायते, संस्काराश्च येनानुजीवन्ति, सोऽ परिदृष्टव्यवसायः । यथाह—

"निरोधधर्मसंस्काराः परिणामोऽथ जीवनम् । चेष्टा-शक्तिश्च चित्तस्य धर्मा दर्शनवर्जिताः ॥" इति ।

निरोधः समाधिविशेषः, धर्मः पुण्यापुण्ये, संस्कारा वासनारूपा आहितभावाः, परिणामोऽपरिदृष्टव्यव-सायः, जीवनं प्राणाः कार्यकारणयोरभेदविवक्षया जीवनं स्वकारणस्यान्तःकरणस्य धर्मत्वेनोक्तं, चेष्टा

अवधानरूपा, शक्तिश्चेष्टाजननी सर्वशक्त्यात्मकं तृतीयान्तःकरणं हृदयाख्यं मन इति भावः इत्येते सर्वे भावास्तामसा इति ज्ञेयाः ॥ ४० ॥

व्याकृतमाभ्यन्तरकरणम्, बाह्यकरणान्यधुनोच्यन्ते। तेषु कर्णत्वक्चक्षूरसनानासा इति ज्ञानेन्द्रियाणि । एतानि प्रणालीभूतानि प्रत्यक्षवृत्तेः । क्रियात्मनः बाह्यविषयस्य सम्पर्कादुद्रिक्तायामिन्द्रियात्मास्मितायां तत्सम्बन्धिना प्रकाशशीलेनास्मिप्रत्ययात्मकेन ग्रहीत्रा यो विषयप्रकाशः क्रियते तदिन्द्रियजं ज्ञानम्। तस्माद्बुद्धीन्द्रियं ग्राहकं वाहकञ्च क्रियात्मनो ज्ञेयविषयस्य ॥४१॥

शब्दग्राहकं श्रोत्रम् । शीतोष्णमात्रग्राहकं त्वग्वृत्ति ज्ञानेन्द्रियं त्वगाख्यम् । त्वचि शीतोष्णबोधस्तथा तेज आख्या अन्येऽपि बोधा विद्यन्ते । यथाऽऽम्नायः "तेजश्च विद्योतयितव्यञ्चेति ।" "तेजश्च त्वगिन्द्रियव्यतिरेकेण प्रकाशविशिष्टा या त्वक् । तया निर्भास्यो विषयो विद्योतयितव्यमिति ।" तत्र न च त्वक्स्थोपश्लेषबोधः तेज आख्यः त्वगाख्यज्ञानेन्द्रियकार्यम्, शीतादेराश्लेषबोधस्य च विसदृशत्वात् । उपश्लेषबोधस्तु कर्मेन्द्रिय प्राणानां सात्त्विको बोधांशः। शब्दरूपवत् शीतोष्ण ज्ञान सिद्धिः न तथाश्लेषबोधसिद्धिः । रूपग्राहकं चक्षुः, रसग्राहकं रसनेन्द्रियं, नासा च गन्धग्राहिणी, श्रोत्रे इतरतुलनया ग्रहणस्य पौष्कल्यमव्याहतत्वं च, ततस्तत्

सात्त्विकम् । शब्दात्तापादेर्व्याहतत्वदर्शनात्त्वागिन्द्रियं सात्त्विकराजसम् । त्वग्विषयादपि रूपस्य व्याहति योग्यत्वदर्शनात् तथाच तस्याचिन्त्याशुसंचाराद्राजसं चक्षुः । रस्यं तरलितं सद्रसनेन्द्रियं भावयति, तद्भावनाविशेषोद्रेकाद्रसज्ञानसिद्धिः । सूक्ष्मकणव्यतिषङ्गाद् गन्धज्ञानोद्रेकः । रसगन्धावाप्यत्रयादावृतौ । तत्र सूक्ष्मतरभावनाविशेषसाध्यत्वाद्रसना राजसतामसी, नासा पुनस्तामसीति । ज्ञानेन्द्रियविषयः प्रकाश्यमित्याख्यायते ॥ ४२ ॥

वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाणि । तेषां सामान्यविषयः स्वेच्छाचालनम् । प्रत्यङ्गानां समञ्जसचालनेन कार्यविषयसिद्धिः । ध्वन्युत्पादनं वाक्कार्यम् । शिल्पशक्तिर्यत्राधिष्ठिता स पाणिः । व्यवहार्यद्रव्याणां तदवयवानां वाभीष्टदेशस्थापनं शिल्पम् । गमनक्रियाशक्तिर्यत्राधिष्ठिता तत् पदम् । मलमूत्रोत्सर्गः पायुकार्यम् । जननव्यापार उपस्थकार्यम् । श्रूयते च—"तस्यानन्दो रतिः प्रजातिः"। स्मर्यते च "पायूपस्थविसर्गार्थमिन्द्रिये तुल्यकर्मणी । विसर्गे च पुरीषस्य विसर्गे चापि कामिके" इति । बीजसेकप्रसवौ जननव्यापारौ । सर्वेषु चालनविषयसाम्यात् एकस्य कर्मेन्द्रियस्य कार्यविषयः अन्येनापि सिध्यति । यत्र यत्कार्यस्योत्कर्षः तदेव तदिन्द्रियम् । उरासि श्वासयंत्रस्य स्वेच्छाधीनांशे तन्तुषु च

जिह्वोष्ठादौ च वागिन्द्रियस्थानम्। "जिह्वाया अधस्तात्त-न्तु" रित्युपदेशात् तन्तुः कण्ठाग्रस्थो ध्वन्युत्पादकः। करवदनचंच्वादौ पाणिस्थानम् । पदपक्षादौ पादेन्द्रि-यस्थानम्। बस्त्यादौ पायुस्थानं, जननेन्द्रिये चोपस्थवृत्तिः। वाक्कार्यस्य सूक्ष्मत्वादुत्कर्षाच्च वाक् सात्त्विकी। ततः स्थौल्यं सात्त्विकराजसस्य पाणेः कार्यस्य। पदे क्रियाया आधिक्यमतिस्थौल्यं चेति पदं राजसम् । राजसता-मसः पायुः। उपस्थश्च तामसः। सर्वेषु कर्मेन्द्रियेष्वाश्ले-षबोधाख्यः प्रकाशगुणस्तेषां चालनरूपमुख्यकार्यस्योप-सर्जनीभूतो वर्तते । तस्य चाश्लेषबोधस्य वागिन्द्रिये ऽत्युत्कर्षः, यत्सहाया सूक्ष्मा वाक्यक्रिया सिध्यति। इतरेषु च तद्बोधस्य क्रमशो ऽल्पाल्पत्वमिति । कर्मे-न्द्रियकार्यविषया स्मृतिर्यथा–"हस्तौ कर्मेन्द्रियं ज्ञेयमथ पादौ गतीन्द्रियम्। प्रजनानन्दयोः शेफो निसर्गे पायुरि-न्द्रियमिति ॥" तथा च–"विसर्गः शिल्पगत्युक्ति-कर्म तेषां हि कथ्यते।" इति ॥४३॥

तृतीयं बाह्यकरणं प्राणाः। "जीवस्य करणान्याहुः प्राणान् हि तांस्तु सर्वशः। यस्मात्तद्वशगा एते दृश्यन्ते सर्व-जन्तुषु ॥" इति सौत्रायणश्रुतौ प्राणानां जीवकरणत्व-मुक्तम्। प्राणा देहात्मकधार्यविषयत्वेन बाह्यं भौतिकं व्यवहरन्ति, तस्मात् बाह्यकरणम्। "अहं पंचधात्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामीति" "प्राणश्च विधा-

रयितव्य” श्चेति श्रुतिभ्यां देहधारणं प्राणानां सामान्य-कार्यमित्यवगम्यते। निर्माणवर्धनपोषणानीत्येषां धारण-कार्येऽन्तर्भावः । तथा च स्मृतिः—“तथा मांसं च मेदश्च स्नाय्वस्थीनि च पोषति । कथमेतानि सर्वाणि शरीराणि शरीरिणाम् । वर्द्धन्ते वर्द्धमानस्य वर्द्धते च तथा बलम् ॥” इति । पोषणं शरीरनिर्माणं वर्द्धनं चेति त्रयं मूलं प्राण-कार्यमित्यर्थः । पोषणादीनामनुकूलक्रिया अपि प्राण-कार्यमिति ज्ञेयम् यथा श्वासादि । चित्तेन्द्रियवत् सन्ति प्राणानामपि पञ्च भेदाः । ते यथा प्राणोदानव्यानापान-समाना इति । ताभ्य एव पञ्चभ्यः शक्तिभ्यो देहधारण-सिद्धिः ॥४४॥

तत्र बाह्योद्भवबोधाधिष्ठानधारणं प्राणकार्यम् । “चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते ।” “ह्येनं चाक्षुषं प्राणमनुगृह्णानः” इत्यादिभ्यश्च श्रुतिभ्यः, तथा च—

“मनोबुद्धिरहंकारो भूतानि विषयाश्च सः । एवं त्विह स सर्वत्र प्राणेन परिचाल्यते ॥” इत्यादिस्मृति-भ्यश्च ज्ञानेन्द्रियादिगतबाह्योद्भवविषयाविज्ञानस्रोतःसु प्राणवृत्तिरित्यवगम्यते । चत्वारः खलु बाह्योद्भवबोधाः । ते यथा चैत्तिकप्रमाणं, बुद्धीन्द्रियसाध्यालोचनं ज्ञानं, कर्मेन्द्रियस्योपश्लेषबोधः, तथा चाजिहीर्षाबोध इति । वातपेयान्नरूपस्याहार्यस्य त्रैविध्यात् त्रिविध आजिही-

र्षाबोधः, श्वासेच्छाबोधः पिपासा च क्षुधा चेति। आहार्यस्य बाह्यत्वादाजिहीर्षाबोधः बाह्योद्भवः। तत्र श्वासेच्छादिबोधाधिष्ठाने प्राणस्य मुख्यवृत्तिः। यथाम्नायाः—"प्राणो हृदयम्" "हृदि प्राणः प्रतिष्ठितः" "प्राणोऽत्ता" इत्यादयः। उक्तञ्च—

"आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यगे।
प्राणालय इति प्रोक्तः" इति। नाभिमध्यगे क्षुद्बोधाधिष्ठान इत्यर्थः। चित्तेन्द्रियशक्तिवशगः प्राणस्तेषां बाह्योद्भवबोधाधिष्ठानांशं विधरते॥ ४९॥

शारीरधातुगतबोधाधिष्ठानधारणमुदानकार्यम्। "पुण्येन पुण्यं लोकं नयति, पापेन पाप" मिति श्रुतेः "उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्ति" श्चेति योगसूत्रात् "उदान उत्क्रान्तिहेतु" रिति वचनाच्च अपनीयमानादुदानान्मरणव्यापारशेष इति प्राप्तम्। मरणकाले आदौ बाह्यबोधचेष्टानिवृत्तिः। उक्तञ्च—"मरणकाले क्षीणेन्द्रियवृत्तिः सन् मुख्यया प्राणवृत्त्यावतिष्ठते।" तदा शारीरधातुगतबोध एवावशिष्यते। यस्य भागशः शरीराङ्गत्यागान्मृतिः। तस्मादुदानः शारीरधातुगतबोधः। स्मर्यते च—"शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्मसु" इति। मर्मसु शारीरधातुगतबोधाधिष्ठानेष्वित्यर्थः। "अथैकयोर्ध्व उदानः" इत्यादि श्रुतिभ्यः "सुषुम्ना चोर्ध्वगामिनी" ति, "ज्ञाननाडी भवेद्देवि योगिनां सिद्धिदायिनी" ति च।

शास्त्राभ्यामूर्ध्वस्रोतस्विन्यां सुषुम्नानाड्यां मेरुदण्डमध्य-गतायामान्तरबोधस्य मुख्यस्रोतोभूतायामुदानस्य मुख्या वृत्तिः, सर्वत्र च सामान्यवृत्तिरिति । उक्तञ्च—“तयैक-योर्ध्वः सन्नुदानो वायुरापादतलमस्तकवृत्ति” रिति । श्चित्तेन्द्रियशक्तिवशगा उदानशक्तिस्तेषां च धातुगत-बोधाधिष्ठानांशं बिभर्ति ॥ ४६ ॥

चालनशक्त्यधिष्ठानधारणं व्यानकार्यम् । “अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुषः आयमन” मिति, “यो व्यानः सा वाक्” इत्यादिश्रुतिभ्यः स्वेच्छाचालनशक्त्याधिष्ठान-धारणं व्यानकार्यमिति गम्यते। “अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखा-नाडीसहस्राणि भवन्त्यासु व्यानश्चरती” ति श्रुतेर्हृदयात् प्रस्थितासु नाडीषु व्यानवृत्तिरित्यपि च गम्यते । ता हि हृन्मूला नाड्यो रसरक्तादीन् संचालयन्ति । तथा च स्मृतिः—“प्रस्थिता हृदयात्सर्वाः तिर्यगूर्ध्वमधस्तथा । वहन्त्यन्नरसान्नाड्यो दशप्राणप्रचोदिताः ॥” इति । अतः स्वेच्छासंचालके स्वतःसंचालके च शरीरांशे व्यान-वृत्तिरिति सिद्धम् । एतयोरन्त्ये च तस्य मुख्यवृत्तिः । इतरकरणशक्तिवशगेन व्यानेन तत्रत्यसंचालकांशो विध्रियत इति ॥ ४७ ॥

मलापनयनशक्त्यधिष्ठानधारणमपानकार्यम् । “नि-

रोजसां निर्गमनं मलानाञ्च पृथक् पृथगिति" स्मृते-रोजोहीनानां सर्वधातुगतमलानां पृथक्करणमेवापानकार्यम्। न तु विण्मूत्रोत्सर्गस्तत्कार्यं तस्य पायुकार्यत्वात्। "पायूपस्थेऽपानमिति" श्रुतेः मूत्रादिमलपृथक्कारके शरीरांशे पाय्वादौ तस्य मुख्या वृत्तिः। सर्वगात्रेषु च सामान्यवृत्तिरिति ॥ ४८ ॥

देहोपादाननिर्माणशक्त्यधिष्ठानधारणं समानकार्यम्। तथा च श्रुतिः—"एष ह्येतद्धुतमन्नं समन्नयति तस्मादेताः सप्तार्चिषो भवन्ती" ति, "यदुच्छ्वासनिश्वासावेतावाहुती समं नयतीति स समान" इति च। अतः त्रिविधाहार्यस्य देहोपादानत्वेन परिणमनं समानकार्यमिति सिद्धम्। उक्तञ्च—"पीतं भक्षितमाघ्रातं रक्तपित्तकफानिलात्। समं नयति गात्राणि समानो नाम मारुतः॥" इति। "मध्ये तु समान" इति श्रुतेर्नाभिदेशस्थे आमाशयपक्वाशयादौ मुख्या समानवृत्तिः, सर्वगात्रेषु च तस्य सामान्यवृत्तिरिति। यथोक्तं योगार्णवे—"सर्वगात्रे व्यवस्थित" इति ॥ ४९ ॥

बाह्योद्भवबोधाधिष्ठानं, धातुगतबोधाधिष्ठानम्, चालकशक्त्यधिष्ठानम्, मलापनयनशक्त्यधिष्ठानं, देहोपादाननिर्माणशक्त्यधिष्ठानञ्चेति पञ्चानामेतेषामधिष्ठानानां संघातः शरीरम्। एभ्योऽतिरिक्तः नास्त्यन्यः शरीरांशः। प्रकाशाधिक्यात् प्राणः सात्त्विकः, आवृततरत्वादुदानः

सात्त्विकराजसः, क्रियाधिक्याद्व्यानः राजसः, अपानः राजसतामसः, स्थित्याधिक्यात् समानश्च तामसः ॥५०॥

ज्ञानेन्द्रियकर्मेन्द्रियवत् प्राणा अप्यस्मितात्मकाः । श्रुतिश्चात्र—"आत्मन एष प्राणो जायते" इति । अपरिणामित्वाच्चिदात्मनः, अत्र आत्मनोऽस्मिताया इत्यर्थः ।

"सत्त्वात्समानो व्यानश्च इति यज्ञविदो विदुः ।
प्राणापानावाज्यभागौ तयोर्मध्ये हुताशनः ॥" इति स्मृतेरप्यन्तःकरणात्प्राणोत्पत्तिः सिद्धा । तथा च सांख्यानुशिष्टिः—"सामान्यकरणवृत्तिःप्राणाद्या वायवः पञ्च" इति । अन्तःकरणत्रयाणां प्राणो वृत्तिः परिणाम इति भावः ॥ ५१ ॥

बाह्यकरणानां मध्ये ज्ञानेन्द्रियेषु प्रकाशगुणस्याधिक्यं क्रियास्थित्योश्चाप्राधान्यं, ततः सात्त्विकं ज्ञानेन्द्रियम् । कर्मेन्द्रियेषु क्रियागुणस्य प्राधान्यं प्रकाशस्थित्योरल्पता, ततः राजसं कर्मेन्द्रियम् । प्राणेषु स्थितिगुणस्य प्राधान्यं प्रकाशगुणस्यास्फुटता तथा स्वेच्छानधीनत्वात् कर्मेन्द्रियेभ्यः क्रियागुणस्याप्यपकर्षस्तस्मात्प्राणास्तामसाः ॥ ५२ ॥

तन्मात्रसंगृहीतानि आबुद्धिसमानान्तानि करणानि । ग्राह्याश्रितास्तेषां विषयाः । ग्रहणेन ग्राह्यो यथा व्यवह्रियते स विषयः । ग्राह्यग्रहणयोर्व्यतिषङ्गफलं

विषयः। श्रूयते च-"एता दशैव भूतमात्रा अधिप्रज्ञं दश-महाप्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा न स्युर्न प्रज्ञा-मात्राः स्युर्यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः" इति। ग्राह्यो विषयद्वारेण गृह्यते तस्माद्विषयः सम्पर्कफलभूतो-ऽपि ग्राह्याश्रित इवावभासते । यथा शब्दविषयः ग्राह्या श्रित इव प्रतीयते, वस्तुतस्तु नास्ति ग्राह्यद्रव्ये शब्दः, तत्र घातजन्यो वेपथुरेवास्ति । विषया ग्राह्याश्रितधर्मरूपेण ग्राह्याणि च धर्माश्रयरूपेण व्यवह्रियन्ते तस्मान्नास्ति ग्राह्यस्य वास्तवमूलस्वरूपसाक्षात्कारोपायः। गौणेनानु-मानादिना तत्स्वरूपमवगम्यते । विषयास्तु साक्षात्कृत-स्वरूपाः । करणप्रसादविशेषाद्विषयस्यैव सूक्ष्मावस्था साक्षात्क्रियते योगिभिः न मूलग्राह्यमिति ॥ ५२ ॥

बाह्यधर्माश्रयो ग्राह्यो विषयोऽधुना विचार्यते । बो-ध्यत्वं, क्रियात्वं जाड्यं चेति ग्राह्यधर्माः । तत्र सविशेषाः शब्दस्पर्शरूपरसगन्धा इति पञ्च प्रकाश्यधर्माः, अन्ये च बोध्यविषया ग्राह्याश्रितबोध्यत्वधर्माः।देशान्तरगति-र्बाह्यस्य क्रियात्वधर्मलक्षणम् । कर्मेन्द्रियैः शरीरं संचाल्य तथा प्रकाश्यविषयपरिणतिं देशान्तरगतिं चावलोक्य क्रियात्वधर्मा उपलभ्यन्ते, क्रियावरोधका जाड्यधर्माः । शारीरबाधां बुद्धा तथा जाड्यापगमात्मके शरीरचालने कर्मशक्तिव्ययञ्च बुद्धा, तथा च प्रकाश्यविषयावरणम-वलोक्य जाड्यधर्मा अवगम्यन्ते । कठिनता-तरलता-

वायवीयता-रश्मित्तादयः जाड्यमूला बोधाः ॥ ५४ ॥

प्रत्येकं बाह्यद्रव्येषु बोध्यत्वक्रियात्वजाड्यधर्माणां कतिपयाविशेषधर्मा वर्त्तन्ते। तादृशि त्रिविशेषधर्माश्रय-द्रव्याणि प्रभूतं भौतिकं वोच्यन्ते । यथा घटपटधातु-पाषाणादयः । क्रियात्वजाड्ययोरपि बोध्यत्वात्तयोर्बो-ध्यत्वधर्मे उपसर्जनीभावः । द्विविधो हि बाह्यबोध्यत्व-धर्मः—प्रकाश्यविषयो बाह्योद्भवानुभाव्यविषयश्चेति । तत्र प्रकाश्यधर्माणामेव बाह्याभिविधिः विस्तारयुक्तः बाह्यवस्तुप्रतीतिरूपः । बाह्यजन्यत्वेऽपि नानुभाव्य-विषयस्य सुखकरत्वादेः बाह्याभिविधिः तस्मात् सर्वबो-ध्यत्वक्रियात्वजाड्यधर्मेषु पुरोवर्तिनः प्रकाश्यधर्माः । तान् पुरस्कृत्यान्ये उपलभ्यन्ते। तस्मात्प्रकाश्यधर्मानुसा-रत एव स्थूलविषया सूक्ष्मविषयेषु विभज्य साक्षात्क-रणीयाः। प्रत्यक्षविषयाणां प्रकाश्यधर्माणां शब्दस्प-र्शरूपरसगन्धा इति पञ्च भेदाः । तस्मात् पञ्च एव तत्तद्धर्माश्रयभूतानि साक्षात्कारयोग्यानि भौतिकोपा-दानानि भूताख्यद्रव्याणि । क्रियात्वजाड्ये परिणामरूढ-तारूपाभ्यां सामान्यतः भूतेषु समन्वागते ॥ ५५ ॥

आकाशवायुतेजोऽप्क्षितयो भूतानि । तत्र शब्दमयं जडपरिणामिद्रव्यमाकाशम् । तथा—स्पर्शा-दिमया यथाक्रमं वाय्वादयः । प्रकाश्यधर्ममूलविभाग-त्वान्न भूतानि हस्तादिभिः पृथक्करणीयानि । हस्ता-

निरुद्धेषु त्वगादिषु अनिरुद्धेन श्रोत्रमात्रेण यद्बाह्यं शब्दमयं वस्तु अस्तीति प्रत्यक्षीक्रियते तदाकाशस्वरूपम्। एतेन वाय्वादीनामपि स्वरूपमुक्तम्। केचिद्वदन्ति, न सन्ति शब्दाद्येकैकगुणाश्रयाणि पृथग्भूतानि द्रव्याणि, हस्तादिभिः पृथक्कृतानां तादृशामलाभाद् इति। लौकिकानामर्वाग्दृशां पक्षे तत् सत्यम्, न तु योगिनां समाधिबलयुक्तानामिति व्याख्यातम्। तैः पुनरिदमुच्यते, एकस्यैव जडबाह्यद्रव्यस्य क्रियाभेदाः शब्दादयः, किं पञ्चद्रव्यकल्पनेनेति। तत्रेदं वक्तव्यं शब्दादीनां क्रियाजन्यत्वान्न च शब्दाद्याश्रयस्य बाह्यद्रव्यस्य यस्य क्रियाभ्यः शब्दादय उत्पद्यन्ते, तस्यास्ति प्रत्यक्षयोग्यता। बाह्यस्यानुमेयमप्रत्यक्षयोग्यं मूलमस्मितात्मकमुपरिष्टात् प्रतिपादयिष्यामः। बाह्यमूलाया अस्या अस्मितायाः परिणामभेदा एव शब्दादीनामाश्रयद्रव्याणि। येषामस्मितात्मकं बाह्यमूलमननुमतं, तेषां शब्दाद्याश्रयद्रव्यं सर्वथाऽप्रमेयं स्यात्। अप्रमेयद्रव्यमेकमनेकं वेति न विचार्यम्। किं च प्रत्यक्षधर्मानुसारत एव भूतविभागः। सूक्ष्मातिसूक्ष्ममपि बाह्यभावं साक्षात्कुर्वतः पंचधैव बाह्योपलब्धिः स्यात्॥ ५६॥

यथा लौकिकैस्त्रिविशेषधर्माश्रयाणि भौतिकद्रव्याणि सन्तीति निश्चीयते, तथा योगिभिरपि भूततत्त्वं साक्षात्कुर्वद्भिः शब्दाद्येकैकधर्माश्रयिणो बाह्य-

भावा निश्चीयन्ते । यथा वा लौकिकैः हाटकरूपकादिषु भौतिकानि विभज्य शिल्पादौ प्रयुज्यन्ते, तथा योगिभिरपि सर्वभौतिकेषु शब्दमयादीनि भूताख्यानि पंच द्रव्याणि साक्षात्कुर्वद्भिस्त्रिकालदर्शनादौ तानि प्रयुज्यन्ते । भूतलक्षणं यथाह—"शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणः । ज्योतिषां लक्षणं रूपमापश्च रसलक्षणाः ॥ धारिणी सर्वभूतानां पृथिवी गन्धलक्षणा" इति ॥ ५७ ॥

घातमन्थनादिजन्यत्वात् क्रियात्मकाः शब्दादय इति प्राग्व्याख्याताः । तत्र शब्दगुणस्याव्याहततता विश्वतःप्रसार्यता तथेतरतुलनया च पुष्कलग्राह्यता, ततः शब्दाश्रयमाकाशं सात्त्विकम् । तापादेः शब्दादप्रसार्यतादर्शनात् वायुः सात्त्विकराजसः । तदुभयाभ्यां रूपस्य व्याहततरः प्रसारः, तथाऽचिन्त्याशु-संचाराच्च तस्य क्रियाधिक्यम्, ततस्तेजो राजसम् । रसो गन्धात्सूक्ष्मक्रियात्मकस्तस्माद्भूतं राजसतामसम् । स्थूलक्रियात्मकत्वाद्गन्धस्य क्षितिभूतं तामसम् । स्मर्यते च—"अन्योन्यव्यतिषक्ताश्च त्रिगुणाः पंच धातव" इति । पंच धातवः पंच भूतानीत्यर्थः ॥ ५८ ॥

षड्जर्षभनीलपीतमधुराम्लादयः शब्दादिगुणानां विशेषाः । सौक्ष्म्याद्यत्र षड्जादयः भेदाः प्रत्यस्तमिता भवन्ति, तदविशेषशब्दादिभावाश्रयं बाह्यद्रव्यं तन्मा-

त्रम् । स्थूलस्य सूक्ष्मसंघातजन्यत्वात्तन्मात्रं भूतकारणम् । भूतवत्तन्मात्रमपि प्रत्यक्षतत्त्वं, नानुमेयमात्रम् । प्रत्यक्षेण यत्तत्त्वमुपलभ्यते तत्प्रत्यक्षतत्त्वम् । उक्तमिन्द्रियाणां विषयात्मकक्रियावाहकत्वम् । समाधिना स्थैर्यकाष्ठाप्राप्तेष्विन्द्रियेषु तेषां विषयात्मचाञ्चल्यग्राहकताऽभावे च प्रत्यस्तमयते विषयज्ञानम् । प्रागस्तगमनादतिस्थिरयेन्द्रियप्रणालिकया गृह्यमाणातिसूक्ष्मवैषयिकोद्रेको यद्बाह्यज्ञानमुत्पादयति क्षणप्रतियोगिनी सा क्रियापरिणतिस्तन्मात्रस्वरूपम् । तदातिस्थैर्यादिन्द्रियाणां स्थूलक्रियात्मानो विशेषविषयाः सूक्ष्मया एकयैव दिशा गृह्यन्ते । तस्मात्तन्मात्राणि अविशेषा इत्युच्यते । यथोक्तम्––"तस्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता स्मृता । न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः ॥ इति । विशेषाः षड्जादयस्तद्रहिता अविशेषा इत्यर्थः, यथोक्तम्–"विशेषाः षड्जगान्धारादयः शीतोष्णादयः नीलपीतादयः कषायमधुरादयः सुरभ्यादय" इति । विशेषरहितत्वात्तानि शान्ततादिशून्यानि । शान्तः सुखकरः, घोरः दुःखकरः, मूढो मोहकर इति । वाह्यस्य नीलपीतादिविशेषगुणेभ्य एव सुखादिकरत्वम्, तद्रहितस्याविशेषस्यैकरसस्य तन्मात्रस्य नास्ति सुखादिकरत्वमिति । तन्मात्राणि यथा शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति । तानि यथाक्रममाका-

शादीनां कारणानि । शब्दादिगुणानां यातिसूक्ष्मावस्था तदाश्रयद्रव्यमेव तन्मात्रम् । यथोक्तं भास्कराचार्येण वासनाभाष्ये—"गुणस्यातिसूक्ष्मरूपावस्थानं तन्मात्रशब्देनोच्यत" इति । सूक्ष्मगुणाश्रयस्य क्षणक्रमेण गृह्यमाणस्य सूक्ष्मैकोऽवयवः परमाणुः। भूतवत्तन्मात्राण्यपि ज्ञानेन्द्रियमात्रग्राह्याणि । निरुद्धेष्वपरेषु एकेनैव ज्ञानेन्द्रियेण विचारानुगतसमाधिस्थिरेण गृह्यमाणानि तानि पृथगुपलभ्यन्ते ॥ ६९ ॥

तन्मात्रेभ्यः परः सूक्ष्मो बाह्यो भावो न प्रत्यक्षयोग्यः । भूततन्मात्रयोः स्वरूपप्रत्यक्षं योगे विवृतम् । तन्मात्रकारणं न बाह्यत्वेन प्रत्यक्षीभवति । तत्तु अनुमानेन निश्चीयते । योगिनां परमप्रत्यक्षपूर्वकं हि तदनुमानम् । तन्मात्रसाक्षात्कारे विषयस्य सूक्ष्मचाञ्चल्यात्मकत्वमनुभूयते । तत्र इन्द्रियाणामपि अभिमानात्मकत्वमुपलभ्यते तस्य चाभिमानस्य ग्राह्यकृतोद्रेकाज्ज्ञानम् । यदभिमानं चालयति तदभिमानसजातीयं स्यादिति । तस्माद्ग्राह्यमभिमानात्मकमित्यनया दिशा ग्राह्यमूलग्रहणयोः सजातीयत्वं निश्चीयते। किंच विषयमूलं वस्तु क्रियाशीलम्। बाह्यक्रिया देशान्तरगतिः । देशज्ञानश्च शब्दादेरविनाभावि । ग्राह्यमूले शब्दादेरभावान्न तत्र देशव्यापिनी क्रिया कल्पनीया । तस्मात् विषयमूलवस्तुनः क्रियाऽदेशव्यापिनी । तादृशी च

क्रिया अभिमानस्यैव । तस्मादभिमानरूपं बाह्य-मूलमिति ॥ ६० ॥

सतः विषयाश्रयद्रव्यस्य बाह्यमूलस्य गत्यन्तराभावादपि अभिमानात्मकत्वकल्पनं युक्तम् । सद्बुद्धिः प्रत्यक्षे भावे गृह्यमाणधर्मैर्विशिष्टा सम्प्रजायते, अप्रत्यक्षे च भावे पूर्वज्ञातधर्मैर्विशिष्टा उत्पद्यते, नाऽविशिष्टा सद्बुद्धिः स्थातुमुत्सहते । अत्यध्यक्षस्य बाह्यमूलस्य सत्ता स्वमाहात्म्येनैवोपतिष्ठते, सा च सद्बुद्धिः कैरेव धर्मैः विशिष्टा कल्पनीया स्यात् । न रूपादिधर्मास्तत्र कल्पनीयाः, बाह्यमूले तदभावात् । तस्माद्गत्यन्तराभावादान्तरद्रव्यधर्मा एव तत्र कल्पनीयाः । यतः बाह्यस्य रूपादेरान्तरस्य चाभिमानादेरतिरिक्तो वस्तुधर्मो नास्माभिर्ज्ञायते । सर्वा अप्रत्यक्षज्ञेयपदार्थसत्ता बाह्यैर्वान्तरैर्धर्मैरेव विशिष्टा कल्पनीया ॥ ६१ ॥

अतः सिद्धं बाह्यमूलस्याभिमानात्मकत्वम् । यस्य तदभिमानः, स विराट् पुरुष इत्यभिधीयते । अस्मत्तुलनया तस्य निरतिशयबृहत्त्वम् । तथा च शास्त्रम्—
"तस्माद्विराडजायत विराजोऽधिपूरुष" इति । अन्यच्च—
"यदा प्रबुद्धो भगवान् प्रबुद्धमखिलं जगत् । तस्मिन् सुप्ते जगत्सुप्तं तन्मयं च चराचरमिति" । प्रबुद्धो योगनिद्रोत्थितः सुप्तो योगनिद्रागत इत्यर्थः । सुप्तिजागराभ्यां चेज्जगतः लयाभिव्यक्ती तदा तयोराश्रयद्रव्य-

भूतं विराजपुरुषस्यान्तःकरणमेव जगदात्मकमिति सिद्धम् ॥ ६२ ॥

पुरुषविशेषस्येच्छासम्भूतमिदं जगदित्यभ्युपगमेऽपि जगतोऽभिमानात्मकत्वं स्यात् । इच्छाया अन्तःकरणवृत्तिता प्राग्व्याख्याता, सा चेज्जगत एकमेव कारणं, तदा जगन्मूलतोऽन्तःकरणात्मकं स्यादिति । ग्राह्यात्मको वैराजाभिमानः भूतादीति आख्यायते । ग्रहणे यः प्रकाशधर्मो ग्राह्यतापन्नायामस्मितायां स बोध्यत्वधर्मत्वेन भासते । तथा ग्रहणे यः प्रवृत्तिधर्मः ग्राह्ये तत्क्रियात्वम् । ग्रहणे च यदावरणं ग्राह्ये तज्जाड्यम् । ग्राह्यरूपेण वैराजाभिमानेन विषयात्मक्रियाशीलेन समुद्रिक्तायामस्मदस्मितायां ग्रहणग्राह्यभावा अभिव्यञ्जन्ति । ग्रहणभावस्याधिकरणं कालः, ग्राह्यभावस्य दिक् । परिणामस्यानन्त्यात्कालावकाशयोरनन्तता प्रतीयते । अतः सत्त्वक्रियाधिकरणभूतौ दिक्कालौ अपरिमेयौ । ग्रहणात्मिकाया अस्मिताया याः पंचधा परिणतयः ग्राह्यतापन्नास्ता एव पंचभूततन्मात्ररूपाग्राह्यभावाः । यथा ग्रहणे गुणविभागस्तथैव ग्राह्ये ॥ ६३ ॥

न भूतात्तत्त्वान्तरं भौतिकम् । प्रकाश्यकार्यधार्यधर्माणां संकीर्णग्रहणमेव भौतिकस्वरूपम् । चाञ्चल्यात्स्थूलेन्द्रियस्य तथा ग्रहणम् । शब्दस्पर्शरूपरसगन्धा इति पञ्चप्रकाश्यविषयाः वाक्यशिल्पगम्यसर्ज्यजन्या-

नीति पंचकार्यविषयाः, तथा च वाह्योद्भवबोधाधिष्ठानं, धातुगतबोधाधिष्ठानं, चालनशक्त्यधिष्ठानं, अपनयनशक्त्यधिष्ठानं समनयनशक्त्यधिष्ठानं चेति पंच धार्यविषयाः येषां संघातः शरीरमिति ॥ ६४ ॥

व्याख्यातानि तत्त्वानि । लोकानां सर्गप्रतिसर्गावुच्येते । अनादी प्रधानपुरुषौ उपादाननिमित्तभूतौ करणानाम् । विद्यमाने कारणे प्रतिबन्धाभावे च कार्यस्यापि विद्यमानता स्यादिति नियमात् करणान्यनादीनि । तथाहुः "धर्मिणामनादिसंयोगाद्धर्ममात्राणामप्यनादिसंयोगः" इति । तथा च "अनादिरर्थकृतः संयोग" इति । तथा च गौपवनश्रुतिः "नित्यं मनोऽनादित्वान्नह्यमनाः पुमाँस्तिष्ठतीति" । अग्निवेश्मश्रुतिश्चात्र—"सोऽनादिना पुण्येन पापेन चानुबन्धः परेण निर्मुक्तोऽनन्ताय कल्पते" इत्यादिशास्त्रशतेभ्योऽपि पुरुषस्यानादिकरणवत्ता सिध्यति । तन्मात्रसंगृहीतानि करणानि लिङ्गशरीरमित्युच्यन्ते । लिङ्गशरीराणामसंख्यत्वदर्शनादसंख्याताः क्षेत्रज्ञाः । कस्मादसंख्यानि लिङ्गशरीराणि, स्वोपादानस्यामेयत्वादिति । अपरिमेयस्योपादानस्य परिमितकार्याण्यसंख्यानि स्युः । गुणसंस्थानभेदानामानन्त्यादसंख्याताः करणप्रकृतयः । अतः असंख्याः जीवयोनयः । उपादानस्यामेयत्वाज्जीवनिवासा लोका अप्यनन्तास्तथा चानन्त्यवैचित्र्यान्विताः । यथो-

क्तम्—"ते चानन्त्यं न पश्यन्ति नभसः प्रथितौजसः । दुर्गमत्वादनन्तत्वादिति मे विद्धि मानसमिति" ॥ अतस्तेह्यसंख्येयाः क्षेत्रज्ञाः कदाचिल्लीनकरणाः कदाचिद्व्यक्तकरणा वाऽसंख्यायोनी आपद्यमाना वा त्यजन्तो वा असंख्येषु लोकेषु वर्तन्ते ॥ ६५ ॥

द्विविधः करणलयः, साधितः सांसिद्धिकश्च । तत्र योगेन साधितः लिङ्गशरीरलयः, ग्राह्यभावलयाच्च सांसिद्धिकः । ग्राह्याभावे करणकार्याभावः, कार्याभावे क्रियात्मनां करणानां लय इति नियमाद्ग्राह्यलये लयः करणशक्तीनाम् । यथाह—"चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा छाया । तद्वद्विनाविशेषैर्न तिष्ठति निराश्रयं लिङ्गमिति" लीने ग्राह्ये करणानि लीनानि तिष्ठन्ति । नच तेषामत्यन्तनाशो नाभावो विद्यते सत इति नियमात् । ग्राह्याभिव्यक्तौ तानि पुनरभिव्यज्यन्ते श्रुतिश्चात्र—"तेऽविनष्टा एव विलीयन्तेऽविनष्टा एव उत्पद्यन्ते" इति । "भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयत" इति चात्र स्मृतिः ॥ ६६ ॥

उक्तं जगतः वैराजाभिमानात्मकत्वम् । स्मृतिस्तत्र यथा–"अभिमान इति ख्यातः सर्वभूतात्मभूतकृत् । ब्रह्मा वै स महातेजा यत्र ते पंच धातवः । शैलस्तस्यास्थिसंज्ञास्तु मेदोमांसञ्च मेदिनीति" ॥

तदन्तःकरणस्य च निरोधानिरोधरूपाभ्यां सुप्ति-

जागराभ्यां जगतो लयाभिव्यक्ती। सुप्तौ जडता क्रिया-शून्यता वा भवति । विषयाणां क्रियात्मकत्वाज्जाड्य-मापन्ने ग्राह्यमूले वैराजाभिमाने विषया लीयन्ते । ततः अस्मदादीनामपि लिङ्गलयः । जागरे च क्रियाशीले वैराजाभिमाने विषया अभिव्यज्यन्ते । ततः सजातीय-त्वात् तैर्भावितान्यस्मदादीनां करणानि व्यक्ततामा-पद्यन्ते । यथा सुप्तः पुरुषश्चाल्यमान उन्निद्रो भवति तद्वत् । स्वमूलस्य क्रियावैचित्र्यात् शब्दादीनां वैचि-त्र्यम् । स्मर्यते च—"अहंकारेणाहरते गुणानिमान् भूता-दिरेवं सृजते स भूतकृत् । वैकारिकः सर्वमिदं विचेष्टते स्वतेजसा रञ्जयते जगत्तथा" इति । स भूतकृद्भूतादि-र्वैकारिकोऽहंकारः अभिमानेन इमान् शब्दादिगुणाना-हरते विचेष्टते च विचेष्टन् च जगदिदं स्वतेजसा रञ्ज-यते विषयानारोपयतीत्यर्थः ॥ ६७ ॥

योगनिद्रायां निष्क्रिये वैराजाभिमाने तद्गताशेष-क्रियात्मानो ये अशेषविशेषास्तत्प्रतिष्ठा-विषया निस्तैल-दीपवत् लीयन्ते । तदाऽप्रतर्क्यं स्तिमितं वाह्यं भवति । यथाह—"पुरास्तिमितमाकाशमनन्तमचलोपमम् । नष्ट-चन्द्रार्कपवनं प्रसुप्तमिव संबभौ ॥ " इति ।

निद्राजाग्रतोरन्तरालं स्वप्नावस्था तस्यां जाड्यं वाह्यकरणानां चेतसश्च कल्पनरूपा चेष्टा । वाह्यवशिनः स्रष्टुः सूक्ष्मभूतकल्पना ग्राह्यतापन्ना आदौ कारणसलि-

लाख्यं तन्मात्रसर्गमुत्पादयति । तथा च स्मृतिः—"ततः सलिलमुत्पन्नं तमसीवापरं तमः" इति । ततः प्रागुक्त-स्तिमितावस्थानानन्तरमित्यर्थः । सन्ध्याख्ये स्वप्नख्याने कल्पनरूपा सृष्टिरित्यस्ति श्रुतिस्मृतिप्रवादः ॥ ६८ ॥

विराजपुरुषाणां स्थूलक्रियाशालिनोऽभिमानाद्ग्रा-ह्यतापन्नात्कठिनताकोमलतास्निग्धतावायव्यतारश्मिता-दिधर्माश्रयद्रव्यात्मकः भौतिकसर्ग आविर्भवति । तत्र कठिनताऽतिरुद्धता क्रियायाः । विपरीतक्रियथैव क्रिया-रोधदर्शनात्कठिने द्रव्ये स्वगतरुद्धक्रियाऽनुमीयते । रश्मिता च अत्यरुद्धता क्रियायाः । न च तत्र जडता-ऽभावः योगिनां रश्मिषु विहारसम्भवात् । यथाह-"ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरतीति" । कोमलताद्या अल्पाल्परुद्धक्रियात्मिकाः । वैराजाभिमा-नस्य कल्पनरूप-क्रियाभेदाद् ग्राह्ये काठिन्यादिभेदः। भू-ताद्याख्यस्य तदभिमानस्य भूततन्मात्राभिमानिदैवतैर्वि-धृतस्य क्रियाविशेषो ग्राह्यस्य व्यवधिहेतुर्जलावर्तवत् । तदभिमानस्य ग्रहणात्मकस्य यौगपदिकमिव परिणाम-बाहुल्यं ग्राह्यतापन्नं विस्तारबोधमारोपयति । तस्य च परिणामप्रवाहविशेषः ग्राह्यभूतो देशान्तरगति-र्भवति ॥ ६९ ॥

स्थूलोत्पत्तौ सांख्यानुमता स्मृतिर्यथा-"पुरा स्तिमितमाकाशमनन्तमचलोपमम् । नष्टचन्द्रार्कपवनं

